प्रसिद्धमात्मन्यवराः स्मरन्तु विलोक्य कालं विलया ह्वयन्तु ।
‡ ग्राहोदयत्वात्तिमिलं वदन्तु विजृम्भमाणं गिलितु' जगत्तु ॥६
रवेरथो विभ्रमितोऽस्तगामि उदेष्यदेतच्छशिनोऽपि नामि ।
समस्ति पान्थेषु रुपा निषिक्तं रतीश्वरस्याक्षियुगं हि रक्तं ॥१०
कुमुद्भवं मोदकरं स्वभावान्नवासु रासाविव वासुरा वा ।
नरः सरोऽथो सबलाऽबलापि समं नभं स्थानमिदं यदापि ॥११
मित्रं हतं पश्यत आस्यमाराच्छितीकृतं श्रीनभसोऽश्रुधारा ।
उदेष्यदच्चच्छलतो निरेति ततः शुचेयं मम भावनेति ॥१२
❀ दिनावसाने तरणे + र्विनाशः न दृश्यते क्वाप्यु × डुपस्तथा सः
+ नदीपरूपे सिमिरे ब्रुडन्ति चक्षूंषि नृणां विकलानि सन्ति ॥१३
हंसं हठात्सायमयेन भुक्तं समुज्झितोपाङ्गतयोपरक्तं ।
निभाल्य नीडान्यधुनाश्रयन्ति द्विजातयस्तं च पुनः शपन्ति ॥१४
उच्चैस्तनाकाशगिरीशसानोः श्रीगैरिकस्योच्चय एव भानोः ।
मिषाच्च्युतोऽतः समुदेति पांशुः सायाख्ययायं सुतरां ततांशुः ॥१५
अकायशंकासहितः सकायः पन्थास्सतां वीक्ष्य भवद्विहायः ।
कुमुद्वतीनामसुमुद्वतीति कृत्वात्र जाता क्षणदाप्रणीतिः ॥१६
पीत्वाऽऽदिवं श्रीमधुनस्तु पात्रं पूषा पुनर्लोहितमेति गात्रं
क्षीवत्वमापन्न इवायमद्य समीहतेऽहो पतितु' विपद्य

---

‡ ग्रहाणामसौ ग्राहश्चासावुदयश्च ग्राहाणां नक्रादीनामुदयो वा ।
❀ सायं समये दुर्भाग्ये च ।
+ सूर्यस्य नौकायाश्च ।
× चन्द्रमा लघुनौका च । + अनल्पे समुद्रात्मके च ।

वसुव्यपेतोप्यनुरागि एष नभोनिकाप्यादधुना दिनेशः
प्राचीनतातोप्यनुरागवन्तं प्रतीह नादादधुना दृगन्तं
दिशा प्रतीच्या खलु वारवध्वा निष्काशतेहानुपतापकृद्वा
निष्काशयामास नभोनिकायाच्छ्रीपाशपाशैर्हरिदेष काया
निमीलतीहातिशयेन दिक्षु गलद्भिरेफाश्रुपयोजचक्षुः
राजीविणीयं भवतो वियोगाच्छोकाकुलेवाभिरवीतियोगात्
उपद्रुतोऽशुस्तिमिरैः सरद्भिर्भयेप्यसम्मूढमतिर्महद्भिः
विखण्ड्य देहं प्रतिगेहमेष विराजते सम्प्रति दीपवेशः
दिगम्बरं यत्त्वपहृत्य भानुर्द्रुतः पुनर्व्यस्तकरोऽस्तसानुं (नौ)
ग्रस्तं जगत्स्वस्ततया त एव करैरपास्येत तदि············
पीतं यदेतन्निशयाम्बरन्तु नीडं खगाः स्पष्टमिति श्रयन्तु
प्रयाति कामी नवलोहितं तद्दारा श्रयन्ते धवलम्भवन्तः
स्थितिः सतां सम्वरितामुकेन समङ्किता श्रीर्जडजेषु येन
रविः कुतो नावपतेदिदानीमुत्तापकोऽसौ जगतोऽभिमानी
पतत्यसौ वारिनिधौ पतङ्गः पद्मोदरं सम्प्रति मत्तभृङ्गः
आक्रीडकन्दोर्निलये विहङ्गः शनैश्चरम्भोरुजनेष्वनङ्गः
अभात्तमांपीततमाहिदीपैर्विकस्वरैर्भिमकिता समीपैः
सौभाग्यदात्री विधृतैर्हरिद्राङ्कुराङ्गिताभिरधीतनिद्रा
गमुत्कगोलं तु हिमादभीपुः पुनर्जगद्भूपणता निनीपुः
तापान्वितं सीमनि सिन्धुवारः प्रक्षिप्तवांस्तं विधिर्हेमकारः
निशाविसम्वादविवर्जितत्वात्समुत्तमस्थानसमर्थितत्वात्
सद्भिः समाराध्यतया हि तत्वात्तुल्यत्वमास्ते जिनवाचि गत्वा

जनप्रवृत्तिः सहदेवतासीदहोनिशायां नकुलक्रमाशीः
धनुर्धरो भीमतया सकामः सद्धर्मराजाभ्युदयोऽभिरामः
रवेः सवेगं पतनात्समुद्रे समुत्पतन्त्यध्वनि किन्नु शब्दैः
तदङ्गजानां पयसां पृषन्ति नक्षत्रनाम्नां सुतरां लसन्ति
दुर्वारमुत्सर्पति तावदस्मिन्दिवामणिं किन्नु सहस्ररश्मिं
तमः समुद्रे द्रुतमभ्युपात्तुं स्मरन्त्यमीः शुद्धहृदोऽधुना तु
प्रदीपयुक्ता मृदुदारभावा समासतस्तद्धितकृत्प्रभावा
कृतं तथा साधुविधानमेति सन्ध्या स्वयं व्याकृतिसत्क्रियेति
अभात्तमां पीततमा हि दीपैर्विकस्वर............
गतस्तटाकान्तरमाशु हंसस्त्यक्त्वामुकं पुष्करनामकं सः
तमोमिषाच्छैवलजालवंशः स्फुरत्यतोऽस्मिन्नयमस्तदेशः
पातुं किलातुच्छतमारुणास्त्रं विस्तारिताराततिदन्तपङ्क्तिः
निशाचरोऽतीव भयङ्करोऽसाविहान्धकारापरवाक् प्रसक्तिः
निशौतुकीतन्मयकौतुकित्वात्कपोतमादाय विधुं त्वकित्वात्
गतानभःसौधशिरोऽथ ऋक्षास्तद्दन्तपातात्पतिता हि पक्षः
सन्ध्यामिषेणापरशैलसानुं प्रज्ज्वाल्य यन्नश्यति चित्रभानुः
तमांसि धूमाः प्रसरन्ति नो चेद्यमश्रुसंघोभमिषात्कुतोंचेत्
नक्षत्रकाचांशतताग्र एष शालो विशालोऽस्तु तमोनिवेशः
आज्ञामतिक्रम्य रतीश्वरस्य निर्गच्छतां यः प्रतिषेधद्ध (व) श्यः
नष्टेऽपि पत्यौ तरणौ द्युनामारामाविधुं स्त्रागभिसर्तुकामा
श्यामां समन्ताद्विदधाति शाटीं तमोमयीं तत्परिवादवाटीं
नष्टेऽपि पत्यौ तरणौ द्युरामासुधांशुमारादभिसर्तुकामा

सम्मुत्तरीतुं परिवादघाटीं तमोमयीं वा विदधाति शाटीं
प्रदोषसिंहाक्रमणान्वयानां नेदं तमः क्षुब्धदिशागजानां
विनिर्गलद्गण्डजलप्रसारस्ताराततिचारात्कवलोपहारः
स्वर्गीयगंगागतकोकिकानामितोऽकिकानां विरहात्तकानां
तारा न वारान्तु पृषन्ति संति चक्षुर्भुवां दिक्षु पुनः पतन्ति
कारी निशाचावा निशादरस्य नारीह सा रीतिकरी स्मरस्य
लात्वा रतिं सञ्चरतीव लोके पतत्यतः सम्प्रति नावलोऽके
निशावधू स्वागतमात्मभर्तुरुद्दिश्य वा कैरवहर्षकर्तुः
बृहत्तमस्तोमककेशवेशे मुक्ताश्च तारा विदधात्यशेषे
कलंकिनः शासनमत्र रात्रावहो न सा केवलकारिमात्रा
विचारहीनां भुवमीक्षमाणो लभे प्रदेशानमनागिवाणोः
असौ निशेन्दोः परिरम्भवारादाराच्च ताराश्रमवारिसारा
ह्रियांशुदीपव्ययिनीत्युदारातमोमिषात्तत्कृतधूमधारा
तमःसमारम्भपरम्पराभित् सूचीरुचः पीनपयोधराभिः
दीपान्प्रबुद्धान्प्रतिधामकामशरानिव स्वर्णधरान्वदामः
नीलामलाच्छादनसुन्दरीणां भूपांशुभिर्भिन्नमथेत्वरीणां
तत्प्रेमचाम्पेयकषाभिरामितमस्तमालप्रतिमं वदामि
अस्तोदयाहार्यगतार्कचन्द्राभिधानकर्णाभरणाप्यतन्द्रा
समुत्क्षिपन्ती कुसुमानि भानि आयाति सन्ध्या किमसाविदानीं
चण्डांशुचाण्डालसमाश्रयत्वाद्दुष्टं विहायः सदनन्तु मत्वा
स्फुरत्तमामन्दतमश्चयेन निशावधू लिम्पति गोमयेन
चण्डांशुसंस्पृष्टमिदं विहायः लिप्त्वा तमोगोमयतो निशा यत्

ददाति कीर्णोडुकतण्डले तु विधुप्रदीपं तनुशर्महेतु
सन्ध्यामिषेणोत्कपणप्रतीतमस्तावनिधे निकषाश्मनीतः
विक्रीय भानुं मरुपिण्डमानी तानीव स्वेनोडुकरुप्यकानि
यर्द्दकविम्बं करकं त्ववापि तथास्य सन्ध्या त्वगिवोज्झितापि
कालेन तद्बीजभुजातु भानि भवन्तु अस्थीन्यथ थूत्कृतानि
उत्सङ्गजं सूचयतीन्दुदेवं पूर्वाद्रिमूलान्तरितं दिगेवं
शोणानना कैरवरागिभृङ्गारवैरियं सन्मणितप्रसङ्गा
मन्ये मधुच्छत्रमघस्रजानिर्भवन्ति यद्बिन्दुनिमानिमानि
तमोभिपादुत्थितमक्षिकाभिर्व्याप्तं जगत्किन्न पुरैव ताभिः
चण्डीशचूडामणिरेप भर्ता कुमुद्वतीनां स्मरसन्निधर्ता
मित्रं समुद्रस्य च पूर्वशैलशृङ्गे तु सोमः कलशायतेऽलं
सिंही सुतस्याप्यरदैर्व्रणान्तु सुधांशुबिम्बस्य पदानि सन्तु
वियोगिनीनामथवा दृगन्तैः समं गतैरञ्जनकैर्धृतं तैः
तमोंऽशुकं राज्यपसार्य शस्तैः करैश्च मध्यं स्पृशति स्वतस्तैः
परिस्फुरत्कैरववक्त्रबिम्बा श्यामाद्रवश्चन्द्रमणीति दम्भात्
श्रीवर्द्धमानो विधुरेप जीयाच्छ्रीकौमुदाधारतया यदीया
कलाश्रयन्त्यां कलिकालकायानुद्योतयन्ती समयं निशायां
स्वयंकरक्षेपकरः परिज्ञा कुमुद्वतीनां सदसीति दृष्वा
तास्तास्तरामौपधयो ज्वलन्ति स्त्रियः परोद्वाहसहाः क सन्ति
निष्पीड्यमाने तिमिरे करेण भृशं सितांशोर्विधिनादरेण
भङ्क्त्वार्गलं कोकयुगं ह्युदाराशयेन सद्द्वारमदायि चारात्
शाणोपलेऽस्मिन् खलु शीतभानावयं जगत्ताडनकुण्ठितानां

उत्तेजनामङ्कपरिस्थितीनां स्मरः शराणां समुपैत्यदीनां
विलासिनीनां प्रतिवीथि आस्थं निरीक्षमाणः शुचिहासभार्ष्यं
करान्प्रसार्योपगवाक्षमिन्दुः सौन्दर्यभिक्षामटतीष्टविन्दुः
परागपाण्डुः शशिनः सुसृष्टिः करोत्करो(श्रयो)साविव चूर्णमुष्टिः
व्याप्नोति वक्त्रं मृदु मञ्जु यावत्समुत्कतामेति वधूश्च तावत्
वल्मीकमाप्त्वाह्निजनीहृदेकं सुप्तोऽथ दृप्तोऽप्यधुना मुदेकं
लोके करैरुद्धरतात्तरां सोऽनङ्गः फणीशः शिशिरैः सुधांशोः
स्वगोघृतैरुज्ज्वलितेषु काष्ठोदयेषु तारापरनामसाराः
जुहोति लाजाः किल कामसिद्ध्यै द्विजाधिराडेष किलाधिकारात्
त्रस्तं तमोरात्रिपतेस्सदंशुप्रासेन तद्यत्प्रभवज्जगत्सु
लब्ध्वाऽपशङ्कोऽस्तु च राजधानीवियोगिनीनां हृदयेष्विदानीम्
आद्धाशनीराशयपुण्डरीकं वदाम्यदोङ्कस्थितचञ्चरीकम्
यूनां मनोवर्त्मनि तर्तरीकं तरत्यहो कामरमामरीकं
सैन्दुर्यमिन्दुर्द्विविधाहरोऽति वृत्याथ नैर्मल्यमुरीकरोति
न स्थीयतां शान्तहृदं प्रकृत्यामपि प्रवृत्यागतया विकृत्या
स्मरामरस्यामलमातपत्रं शृङ्गारवारस्य च ताम्रपत्रं
विराजते सम्प्रतिराजसत्रं सुधामयं श्रीद्यु सदाममत्रं
पयोनिधिः फेनकचन्दनन्तु भङ्गाः समुत्पेष्टुमहो जयन्तु
मुदे समादाय तदेतदेष दिगङ्गना लिम्पति लाञ्छनेशः
प्राच्यां पुरारक्तिमुपेत्य पापी शापान्निशाया अधुनोपतापी
कलङ्कितामेति तुषारसारगात्रोऽपि रात्रेर्हृदयैकहारः
एतत्सदिन्दीवरभासिनाम समापतत्साम्प्रतमिन्दुधाम

पयोधिमध्ये पततोऽनुवर्ति वृत्तं सुरस्रोतसि आविभर्ति
शशी विहायःसरसि प्रसन्नो हंसायते मेचकशैवलाशी
श्रीचन्द्रिकासारिणिवारिणीह तारातती राजति वुद्बुदाशीः
रामोऽपि राजा हृतवानिदानीं तारावराजीवनकृद्विधानी
निशाचरं सन्तमसं विशालैः सलक्ष्मणोऽसौ करवालजालैः
पादार्दितामंह्नि रवेस्तु दीनां रुतैरिदानीं रुदतीमलीनां
परामृशन् भाति निशानिशानः कुमुद्वतीं स्मेरमुखीं दधानः
श्रीमान् शशी कैरवणीवनेषु नरोऽपि नारीमुखचुम्बनेषु
द्वौ वद्धमानातुलनर्ममग्नौ मिथोऽप्यथो स्पर्द्धनतो हि लग्नौ
तमोऽवगुण्ठान्तंगता ततापि तारापदेशाच्छ्रमवारिणापि
पत्युश्चरत्युत्सवहेतवे तु समुद्यता कैरवहर्षसेतुः
गरं जगन्मोहकरं तमस्तु यदस्य चन्द्रस्य हि भक्ष्यवस्तु
अतः स्वतः कज्जलजालजातितुषारभासो जठरं विभाति
तमोमयं केशचयं नियम्य मरीचिभिश्चाङ्गुलिभिस्तु सम्यक्
विमुद्रिताम्भोरुहनेत्रविन्दुमुखं रजन्याः परिचुम्बतीन्दुः
तमस्विनीज्योत्स्निकयोः प्रसक्तिसम्वादवादीव विधुर्विभर्ति ।
सितासितप्रायमुतात्मकायं द्विच्छायमङ्गाङ्गनयोरिहायं ॥
स्तनन्धयः सम्भवतीव कामी यज्जन्मपत्रस्य विधोः स्मरामि ।
यस्यारिभावे गुरुशुक्लतास्ति व्ययस्थलेऽथो तमसोम्युपास्तिः ॥
दिनेऽपि भावाच्छशिनो नतस्याथ कौमुदीयं कुमुदस्य हि स्यात् ।
चान्दीपदे सम्विदिभूपभूवत्सम्वन्ध आधार इतो बभूव ॥

केचिच्छशं केचिदितः कलङ्कं वदन्तु इन्दोरनिमित्तमङ्कं ।
पिपीलिकानान्तु सुधाकशिम्बं किलावली चुम्बति चन्द्रबिम्बम् ॥
पत्यौ समागच्छति शीतरस्मौ तारामणीभूषणभूषिताभिः ।
किलोपदिष्टं प्रतिकर्मकान्ताः स्मारभन्ते स्म तदादिशाभिः ॥
बद्धं त्वनर्घस्य किमर्थमेतत् हैमं तुलाकोटियुगंचमेतत् ।
इतीव रोषात्पदयुग्ममासीद्रक्तं रमायाः अरुणोपभासि ॥
नितम्बबिम्बे परयोपरोपिताभितः स्खलन्ती खलु सप्तकी सिता ।
मितापताकेव जिताखिलारिणः प्रासादशृङ्गेऽहिपहारवैरिणः ॥
तारुण्यतेजोभिरभूत्स्तनाख्यो द्वीपोऽपि योनङ्गनिवासयोग्ये ।
व्यच्छेदि हारावलिवारपूरैः चेत्रेऽन्यया कान्तिभरैकभोग्ये ॥
श्रुतिलंघनाय वाञ्छति नयनद्वितये स्वभावतस्तरले ।
उचितज्ञताधिपन्ना साध्वी कज्जलमलंचक्रे ॥
गुरुशुक्लतयानिवेशितं मृदुचन्द्राननयाथ कुण्डले ।
खलु दौरुधरीं श्रियं तरां स्म विभर्त्तः प्रियकामजन्मनि
अथ चक्रवदावभौ कयावधृतं गन्धवहाविभूषणं
अवकृष्टमिवाशु कोशतो विजगीषोः स्मरचक्रवर्तिनः
अनुवद्धपरस्पराङ्गुलिस्वकरद्वन्द्वमुदञ्च्य जृम्भिणी
हृदयं विशतो मनोभुवः कृतवत्येव च तोरणश्रियं
प्रियागमनतत्परा यदधि जानु सत्कूर्परा
मिनम्रकरपल्लवार्पितकपोलमूलापरा
लिलेख समयोचितोत्पठित(चरित)मञ्जुमञ्जुस्वना
परेण करतोऽवनौ (शुचिपाणिना) किमपि यन्त्रमाकर्षकं

प्राणयविकाशविदः पुनरपाङ्गमयगोभिरञ्चितचिपहृवः
दृश इव सख्यो युवतिभिरधिदयितं प्रेषिताः कतिभिः
सन्दिशेति किल तुल्ययोदिता लज्जया किमपि नाहमानिनी ।
नम्रया खलु भृशं दृशात्र सा स्मेक्षते त्वतनुतापि तां तनुं ॥
एकत्राङ्कितचौरसाहवतिभिः शश्वद्वणिग्भिर्भवान्,
रङ्गाहो तुलितोऽसि हेमतुलयास्तां किन्तु रत्नाश्रितं ।
प्रीत्या तत्तु विशालदृग्भिरधुना त्वारोप्यते मस्तके,
पापान्नोषि हतोऽसि मुग्धवनितापादेषु पश्य स्थितिं ॥
सखित्वं स्निग्धाङ्गी प्रभवति युवा सोऽपि तरल,
तमिस्रेयं रात्री रहसि कथनीयं मदुदितं ।
समस्येयं क्लिष्टात्र दिशतु किलेष्टन्तु भगवान् ,
नियं वाचां वल्ली प्रसरति सती स्माम्बुजदृशः ॥
अनुकूलेङ्गितकर्त्रीच्छायेव प्रेषिताथ कामिन्या ।
दयितं प्रतीति दूती सन्देशमुदाजहार सती ॥
त्वं विजितमदनरूपस्त्वय्यनुरक्ता च हरिणनयना सा ।
इत्यनुशयादिवामूमुत्तपति किलैकिकां मदनः ॥
कुसुमादपि सुकुमारं वपुरवालतामितीदमुद्धरति ।
इषुना स्मरस्य सुन्दर कुसुमेन हतं तदीयाङ्गम् ॥
अनुरागवर्तिना तव विरहेणोग्रेण सा ग्रहीताङ्गी ।
किमु सम्वदामि गौरी सञ्जाताद्धांबशिष्टेव ॥
इन्दुकरैर्मलयभवैर्वातैः स्पृष्टा मुहुश्च मञ्जुमते ।
दोषभयादिव सिञ्चति तनुमतनु सदश्रुपूरैः सा ॥

इति वारितोऽङ्कुराङ्कितततनुर्मनुष्यो जवेनसुर(ल)तार्थी ।
मुक्ताफलानि चाश्रव्याजादिव सन्ददे तस्यै ॥

दयिता हृतस्य मनसः समातुरैः परिमूढतामिव गतैः पुरानरैः ।
उदिते समुद्धृतपदैः क्षपाकरे प्रयये ततोऽनुपदिभिः स्फुरच्चरे ॥

अनुतनूपगतस्य वपुष्मतो गुरुतरं प्रतिविम्विमथोद्वहत् ।
अतिभरादिव कम्पवतः करान्मुकुरकं निपपात नतभ्रुवः ॥

कान्तावलोकविकशन्नयनप्रणुन्नं,
कञ्जं तु सम्भ्रमभृतः श्रवणान्नताङ्ग्याः ।
प्राणेशपादभुविसन्निपतद्रराजा—
तिथ्येदृशः परिकृतं प्रतिविम्वमेव ॥

प्रमदा प्रमदाश्रुभिः प्रिये समुपागच्छति सत्वरं तरां ।
स्नपयत्यमुकोचितासनं निजवक्षः स्म चकोरलोचना ॥

मानिनीप्रियमुदीक्ष्य विनीवावंशुकेविनमितास्यमिहासीत् ।
सापदानिपरिदृष्टवतीव प्रस्थितस्य सहसा स्मयकस्य ॥

निजनायकमवलोक्य तमागमेका यावद्रामा,
शातवतीहोत्थितासनतः जघनमतिथिरागं ।
संहर्षवशात्पादयोर्नतं जघनपीठमभिरामं,
मंक्षुविनिह्नवशालि च समदान्माहात्म्यगतारामं ॥

(निशासमागमश्चक्रबन्धः)

सन्मधुनोराचार्यत्वं रतिषूतममजनिनिशायां सम्यङ्माराङ्गक्रमं

श्रीमान् श्रेष्ठिचतुर्भुजः स सुषुवे भूरामरोपाह्वयं,
वाणीभूषणवर्णिनं घृतवरी देवी च यं धीचयं।
काव्ये कौमुदमेधयन्त्यपि सुधाबन्धूज्ज्वले तत्कृतः,
सर्गः स्वीयकलाभिरेष दशमः पञ्चोत्तरो निर्गतः॥

इति श्री वाणीभूषण ब्रह्मचारि-भूरामलशास्त्रि-विरचिते
जयोदयमहाकाव्ये पञ्चदशः सर्गः



# अथ: षोडशः सर्गः

निशीथतीर्थे कृतमज्जनेन जयाय निर्यातमथ स्मरेण ।
पीयूषपादोज्ज्वलकुम्भदृष्ट्या सुभस्फुरन्मङ्गललाजमृष्ट्या ॥१

प्रयाणवेलां कुसुमायुधस्याप्यहो स्वयं स्त्रीपुरुषेषु न स्यात् ।
तारुण्यमूर्त्तिष्वपि कस्य कस्य सहायवाञ्छा सुतरां प्रपश्य ॥२

विश्वस्य यद् धैर्यधनं व्यलोपि वियोगिनोऽथापि तु योगिनोपि
रामाभिधामाकलयन्ति नामाधुना पुनस्तं प्रतिकर्तुकामाः ॥३

अनङ्गजन्मानमहोसदङ्ग शक्त्याप्यजेयं समुदीक्ष्य चङ्गः ।
गतो विविक्तुं निजमित्युपायादुपासनायां गृहदेविकायाः ॥४

रतीश्वराज्ञां शिरसा वहन्ति तेऽत्रापि वस्त्राभरणैर्लसन्ति ।
तच्छासनानीति कृतश्च के ते वाचंयमास्सन्तु गुहासु ते ते ॥५

एकाकिने धूमसमंतमस्तु वाष्पाम्बुपूरोदयकारि वस्तु ।
सदञ्जनस्याञ्जनवत्सु शास्तुदृ गम्बुजोन्मीलनकृत्सदास्तु ॥६

सौभाग्यभृङ्गीरुजनास्य फुल्लविलोकिने श्रीध्वजवस्त्रपल्लः ।
हृद्भेदकृत्सम्भवतीव भल्लः परत्रयो दीपशिखांशमल्लः ॥७

सुद्योतनं द्वंतमनो निकाममुद्योतनं चन्द्रमसोऽभिरामम् ।
वियोगिनः सन्तमसं तथातियत्नादिदानीं मनसि प्रयाति ॥८

सिताश्रितं दुग्धमिवादरेण निपीयते सङ्गमिना परेण ।
अथोपितं तक्रमिवात्र नक्रसंकोचनः श्रीशशिरश्मिचक्रं ॥९

कामारिनामाप्यभवल्ललामा यदीयमूर्धान्दुकशीतधामा ।
दिशां जयं श्रीतिपितुः प्रशस्यं साचिव्यमेष प्रचरत्यवश्यं ॥१०
निशाचरः पञ्चशरोऽस्ति पृष्टलग्नो मर्मकाकिन आनिकृष्टः ।
त्वत्तो लभे नो यदि तन्त्रसूत्रमष्टाङ्गसिद्धेः समवास्तु कुत्र ॥११
श्यामं मुखं मे विरहैकवस्तु एकान्ततोऽरक्तमहोमनस्तु ।
प्रत्यागतस्ते ह्यधराग्रभाग एवाभिरूपे मनसस्तु रागः ॥१२
मुहुर्नु बद्धाञ्जलिरेष दासः सदासखि प्रार्थयते सदाशः ।
कुतः पुनः पूर्णपयोधरा वा न वर्तसे सत्करकस्वभावा ॥१३
सद्धारगंगाधरमुग्ररूपं तवेममुच्चै स्तनशैलभूपम् ।
दिगम्बरं गौरिविधे हि चन्द्रचूडं करिष्यामितमामतन्द्रः (?) ॥१४
त्वमप्सरःसारमयी त्वदन्तःक्रियाश्रिया मे सफरो दृगन्तः ।
स सन्ततं नायमसँरत्ततस्तु कुतः पुनर्यद्दुरितं समस्तु ॥१५
चण्डः स्मरोऽसौ धनुर्गति कान्ते सन्धारयोर्ध्वं स्तनपर्वतान्ते ।
ज्वलत्यलं मे विरहाग्निनान्ते किं स्यान्नियासोऽसि विभूतिमाँस्ते १६
स्मरस्मरङ्गस्थलमेत्यदंशस्पृङ् मेऽपि धन्वापहरत्यरं सः ।
त्वं देवि हे दीव्यशराधिभूयन्मुदे तु कोदण्डमुदेतु भूयः ॥१७
नतभ्रु तप्तास्यतनुज्वरेण किलोपवासोऽस्तु सुखाय तेन ।
रसायनाधीट्रसमर्पयास्मिन्नालं तवावेदितलंघनेऽस्मि ॥१८
सद्वृत्तसम्वादसमर्थमद्य श्रीचन्द्रकान्तामृतगुं प्रपद्य ।
नितान्तमन्तःकठिनापि वारिमुक्तामथोरीकुरुते स्म नारी ॥१९
सविभ्रमां यौवनवारिवेगां वधूनदीं भो श्रृणु वीर मे गां ।
उदारभृङ्गारतरङ्गसेनां कोऽस्त्येतुमीशः शुचिहासफेनां ॥२०

उदारवक्रै रुतदारनक्रै रक्लेशितः- सन्त्रतिवीचिचक्रैः।
समुल्वणं यौवनवारिराशिमत्येति जीयात्स नरोऽस्मराशीः ॥२१
कान्तारसद्देशचरस्य चक्षुः क्षेमोऽभवत्सद्धिदपेषु दिक्षु।
अद्वैतसम्वादमुपेत्य वाणमोक्षः क्षणाद्धासवयस्यकाणः ॥२२
नवोद्धृतं नाम दधत्तदिन्द-विम्वं वभूवेह घृतस्य विन्दुः।
वियोगवह्न्युत्तपनाय हेतुर्द्वैतस्य वा स्नेहनकर्मणे तु ॥२३
कुन्दारविन्दादिततावृयेभ्यः शय्येव सासीद्विरहाश्रयेभ्यः।
हसन्ति भङ्गारकभावमिश्राऽसकौ च कौ भौघमिता तमिश्रा ॥२४
शरीरिवर्गस्य तमां विवेकहान्यामहान्यागगुणाभिषेक।
सुरासुराद्धान्तचुरासुयोग आद्यः स्मरेषोरिति सम्प्रयोगः। २५
तालीयकं सौधमिवास्तुवस्तुसंयोगिनः किन्न वियोगिनस्तु।
पुंसः पुनः पित्तलपात्रमस्तु सम्वेदवत्खेदकरं तदस्तु ॥२६
द्वैतानि तानि प्रकृतादरस्य नृशंसतायां सरकं स्मरस्य।
शिलीमुखैर्जर्जरितैष्वसिश्वन्पुनः पुनः स्वाम्वनितेषु किश्च ॥२७
नालं समुत्पीनपयोधभावात्सम्पादने दोर्वलनस्य सा वा।
विनामनं वक्त्रवरस्य मद्यपाने कुतस्स्यात्कुशलाद्य सद्यः ॥२८
अन्वाननं पानकपात्रमाशासमन्वितायाविवतरन्विलासात्।
हस्तेन शस्तस्तनमण्डलान्तमालिङ्ग्य सम्यङ् मदमाप कान्तः ॥२९
भर्त्रात्तनामग्रहणं सपत्न्यास्समर्पिताहो मदिरापि पत्न्याः।
अस्यास्समस्या मददारणाय दृश्यापि तस्या मददारणाय ॥३०
हाला हि लालायितमन्तरङ्गं करोति वीजग्रहणष्वभङ्गं।
हालाहलं प्राह जनेत्र पाला वालापिनी प्रीतपणस्य वाला ॥३१

मद्यं पिबन्नत्र कृतावतारं स्वयोषितः फुल्लसरोजसारम् ।
पीत्वाऽऽननं यन्मदमापगाढं न तेन वा तादृशमेष गाढम् (वाढं)॥३२
सोमं निरीक्ष्यास्य समन्वहेतुं जेतुं दुरन्तं कुसुमेषुकेतुः ।
मधुन्युपात्तप्रतिमावतारं पपावदम्मत्वरमप्यसारं ॥३३
मद्येन सार्द्धं मम सेमुपीतः मशीतरश्मिच्छविभृन्निपीतः ।
नो चेदिदानीं सुदृशां स दन्तम्नमस्स्मयाख्यं च कुतो हृतं तत् ॥३४
रागं तमत्त्र्णाः प्रियवच्छ्रयन्तं रतिप्रतिज्ञां प्रथयन्तमन्तः ।
सुरारमं सन्निदधाति योषा स्म या स्मयोच्छेदपटुं सुतोषा ॥३५
कलङ्किना क्रान्तपदं च कश्यं नावश्यनश्यत्तमसेदमस्यं ॥
तत्याज वेगाच्चषकं स्वहस्तादित्येवमुक्तासुरताय शस्ता ॥३६
अधोऽथ पीतासवसुन्दरेभ्यस्त्यक्तं त्वमत्रं मिथुनाननेभ्यः ।
रुदत्तदिन्दीवरमेव शापश्रिये हियेवालिरवैरवाप ॥३७
आस्वाद्यमद्यं चषकं त्यजन्त्यास्मम्प्रस्रवत्सीधवधरं भजन्त्याः ।
चुचूष सद्यश्चतुरस्तमन्यादरेण चूतोच्चितकं सुदन्त्या ॥३८
चक्राह्वयद्वैतवदुज्वलांशेऽधरावधिप्रेमजुषो विलासे ।
वर्त्म स्वयं वै तमसोऽवरुद्धं मनोजराजेन पुनः प्रबुद्धं ॥३९
मदास्पदोसावधुनोदियाय प्रच्छादितोऽन्तस्त्रपया चिराय ।
यत्नेन योऽम्भोजदृशाम्महीयान्रागो दृशो. प्रीततमं प्रतीयात् ॥४०
यदेवमिन्दीवरपुण्डरीकसारैः समारब्धनिजप्रतीकम् ।
मदेन सत्कोकनदस्य शोभां चचुर्दधच्चारुदृशामदोऽभात् ॥४१
अप्रस्तुतत्वात्सुदृशां सदङ्गे गुप्तोऽपि सन्धातुगतो यथार्थः ।
मदेन वाऽनेन किलोपसर्ग-पदेन हावादिरथो कृतार्थः ॥४२

भ्रुजोश्च वध्वा भृशमप्यकारि स्मितं मुखाम्भोरुहि हावहारि ।
वाकौशलं किञ्च मदेन यूनाच्छटाकटाक्षस्य दृशोरनूना ॥४३

रूपं सदेवाप्रतिमच्छवित्रं कायोनपेक्षिप्रणयं पवित्रम् ।
वचश्च चारुप्रवरेषु तासां वदामि सत्कर्मणामिन्दुभासां ॥४४

तनूनपाद्भिर्मदनं तथाद्भिः खण्डं तथाम्भोरुहरम्यपाद्भिः ।
समासभृद्भासविलासभाषादिभिर्नृ चेतोऽपगलत्सकाशात् ॥४५

जयेज्जनीनां स्मितसारजुष्टिर्नृ भ्यो वशीकारकचूर्णमुष्टि ।
मञ्जीरकोदारझणत्कृतश्च पञ्चेषु मन्त्रोक्तिपदं समञ्चत् ॥४६

रतीशतीर्थाङ्कपदं जघन्यमुद्घाट्य दृक्कोणकणार्धरन्यः ।
उरोजदुर्गे नयनं जनस्य कस्य स्मरादेशकरो न कस्य ॥४७

जगाम मंग्यभृतं त्वमत्र आघ्रातुमात्तप्रतिमेऽलिरत्र ।
वध्वा सवध्वानयनेऽब्जबुद्धि स्याल्लोलुमानान्तु कुतः प्रबुद्धिः ॥४८

ततत्यजेदं भभभाजनन्तु दुद्रुद्रुतं तेमुमुखासवन्तु ।
वध्वा ददं देहि पिपिप्रियेति मदोक्तिरेपालिमुदं निरगेति ॥४९

मणिमयचपकं श्रियमवतरितां दृष्ट्वा वरखल्खण्डितकरितां ।
अधरालक्तनुदोऽपि मुदाराम्भमुद एव दधुर्मधुवाराः ॥५०

मधुनायचरमणायत्प्रगल्भतां वक्रवाक्यरमणायः ।
सूचितगूढरहस्यः परिहासः श्रीजानिमपश्यत् ॥५१

मन्दगलत्त्रपमिरयानिदधन्यार्थपदुन्मिपितचक्षुः ।
वध्वाऽधोमुखपादो दयितमुखं वीक्षितममंक्षु ॥५२

सुदृशां मदेन विभ्रमपुंपि वपुंपीरितानि निजभ्रूणुः ।
इतरेतरसङ्गादिव कुचकुम्भैरुद्धनैर्द्धयतः ॥५३

सागसि रसिके रुष्टा तुष्टा न पदाब्जयोरपि च जुष्टा ।
मद्यविलुप्तविवेका तथैव तमतोप यदि हैका ॥५४
प्रियसङ्गमनिर्जितरुपि शमितविवादे प्रसन्नया धनुषि ।
नेपुं रतिहृदयेशः श्रितसन्धां यावते प्रविदधे सः ॥५५
इत्येवमभिनिवेशे स्मरशरसम्विद्धसकलभूदेशे ।
नक्तं व्रजति विशेषे संहतिलिप्सौ नरि अशेषे ॥५६
एका सखी विवेकाञ्चितचित्तासानुकूलमपि चकितां ।
उपदिशति स्म न वोढां प्रौढावोढारमननुगताम् ॥५७
राजीव मधुरनयने नयने अयने निमीलिते कस्मात् ।
निर्जितदर्पकमधुना दर्पकवशगं प्रियं पश्य ॥५८
यदि कुपितासि सुभाषिणि करजक्षतपूर्वकं मदनशासिनि ।
भुजपाशेन दृढन्तं वधानानिगलेऽत्र विलसन्तं ॥५९
रमणे चरणप्रान्ते प्रणतिप्रवणेऽप्यनन्यशरणे वा ।
रचिता उचिता न रुषस्तत्त्वं निगदामि सखि ते वा ॥६०
शुभवति भवति सताराना काशे भवति भवति अपि चारात् ।
मदवति दवति रतीशे काननमेतस्य वरमीशे(अहं) ॥६१
जयते कञ्चुकहृदयं यदिदं ते तन्वि सङ्कुचति हृदयं ।
भुजवति जवति विलासिम मुञ्च शरं मंक्षु गदितास्मि ॥६२
अञ्चति रजनिरुदञ्चति सन्तमसं तन्वि चञ्चति च मदनः
युक्तमयुक्तं तत्यज रक्तममुस्मिँस्तु रचय मनः ॥६३
मनसि मनसिजनि(मि)ताया वनिताया विरहदग्धहृदयायाः ।
तल्लिङ्गानि तदानीं स्फुलिङ्गानीतिनिरगच्छन् ॥६४

आलीगिरा ह्यकृतिनः पुराऽपराधा उपेक्षिताः कति न ।
अधुना तु तर्जनीयः कितवो नियमेन न वशी यः ॥६५

स्फुरसि कथं भुजलतिके लोचनतां किं गता त्वमपि धृतिके ।
नागतमप्यहममतं स्पृष्टुमलं द्रष्टुमपि मम तं ॥६६

सोमो भवान्यदाभूद्विधुमणिघटिता तदाहमपि साभूः ।
त्वं खररुचिरघशठद्यु मणिप्रकृतिमहमपठं ॥६७

तव निर्घृण किमिहार्थः याहि ययैवानुरज्यसेऽपार्थः ।
माऽपहर कुचग्रन्थि किमपास्तातेऽस्ति हृद्ग्रन्थिः ॥६८

मानिन्यसहेति मुहुर्धिक्कृतिरपि कल्पितामयीह बहु ।
कितवगुणाननुवदता हं जिन सवयोजनेन सता ॥६९

क्रीडाकोपात्कथमपि गच्छेति मयोदिते कठिनहृदयः ।
त्यक्त्वा तल्पमनल्पं गतवान् सखि पश्यतादद्यः ॥७०

यामि विधात्रभ्युदिते पुनरायास्यामि चेति संगदितं ।
तदुदन्तत्वेनाहं नेदं तत्वेन वेद्मि मितं ॥७१

मञ्जुलघौ गुणसारे किल क्वचित्सुसखि नापदाधारे ।
तत्रोपपतौ चेतः पर्यां ना नीदृशि ममेतः ॥७२

सखि शस्तः सखिवत् पातिरिति किं मृदुलोचनेन जानासि ।
शस्तोऽतिसखिवदुपपतिरित्यालि न किं समानासि ॥७३

श्रीमत्तमालशकलभ्रु विमुञ्च जालं,
स्वच्छन्दबोधमधुना निगदामि मालं ।
आशासितेतिव(म)दनोदलवैश्च शस्यै--,
मुक्ताफलानि तु ददात्युपहारमस्यै ॥७४

प्रेयसी प्रियतमस्य पार्श्वतश्चन्द्रकान्तमृदुपुत्रिकां स्वतं ।
संस्फुरत्तरलवारि कां हि कासङ्गतामकथयत्सपत्निकां ॥७५
यूनिरागतरलैरयितिर्यक् पातिभिर्मदमतिष्ववतीर्य ।
दूरदर्शिभिरलंघिनवाला लोचनैः श्रुतिरहो सुविशाला ॥७६
मधुनामधुनाधुना कृतं रसवत् प्रत्ययमभ्युपेत्य तैः ।
मधुरस्मितसुन्दराननैर्मधुरं रूपमवापि यौवतैः ॥७७
हृदि वाचि कपोलयोर्दृशोर्वानिखिलेष्वेव विचेष्टितेष्वदीना ।
अनुरागमिहानुभावयन्ती प्रथितार्थाऽजनिरञ्जनीजनीनां ॥७८
दृगियं श्रुतिलंघनोत्सुकाऽराद्भ्रुकुटीस्मार्तसुधर्मकीर्तिलोयत्नी ।
न पुराणपथाश्रिता विलासाः सुरताङ्कोऽयमनीतिरेव तासां ॥७९
लीलातामरसाहतोन्यवनिता दष्टाधरत्वाज्जनः,
सम्मिश्राब्जरजस्तयेव सहसा सम्मीलितालोचनः ।
वध्वाः पूत्कृतितत्परं मुकलितं वक्त्रं पुनश्चुम्बतः,
निर्याति स्म तदेव तस्य नितरां हर्षाश्रुभिः श्रीमतः ॥८०
भूर्जप्रायकपोलके दललताव्याजेन बीजाक्षराः,
प्रान्ते कुण्डलसम्पर्दो विलसतो युक्तौ ठकारौ तरां ।
लोमालीति च नाभिकुण्डकलिनाश्रीधूपधूमावली,
सञ्जीयाज्जयमालिका गुणवनीयं हेमसूत्रावली ॥८१
मायात्रयपरिवेष्टितात्रिवलिमेपेण तनूदरी ।
त्येषा सा स्मरभूपतेः स्तम्भनविद्यासुन्दरी ॥८२
सुन्दरीः सद्यः सुन्दरैः कलयितुमनुष्णरुचोऽनुसं ।
मधुराकलालिरिवोज्ज्वलप्रतिभावभावासत्तया ॥८३

रतिषु पाटवमासवोऽलमलं विधातुमभूत् पुनः ।
न तनोः सुखानुमतः परं लालसकरः पठावनः ॥८४

श्रीमान् श्रेष्ठिचतुर्भुजः स सुषुवे भूरामलोपह्वयं,
वाणीभूषणमास्त्रियं घृतवरी देवी च यं धीचयं ।
तस्यास्मिन्मदयन्मनःसमनसां सर्गः समाप्तिं गतः,
श्रीकाव्ये स्वरसेण चंप दशमः षष्ठोत्तरः श्रीमतः ॥८५

इति श्री वाणीभूषण-ब्रह्मचारि-भूरामलशास्त्रि-विरचिते
जयोदयमहाकाव्ये षोडशः सर्गः



# अथ सप्तदशः सर्गः

अथोर्जनीन्द्रो बहुमानवित्तं हर्तुं प्रहर्तुं च वियोगिचित्तं ।
भयाद्व्यनामभ्युपगम्य शिष्टाः सर्वे युवानो रहसि प्रविष्टाः ॥१

श्रिया क्रियातोऽपि किलाप्रशस्यं कलङ्किनं जेतुमिवाप्यवश्यं ।
भास्वान्पवित्राणि रहः कृतानि जयोभ्यवाञ्छन्मृदुचेष्टितानि ॥२

कोकस्य कल्पो विधुजन्मनीति लोकस्य तल्पोक्तगुणप्रणीतिः ।
नो कस्य वांछा प्रभवेन्कलायां जयस्य चानन्दभुवीष्टिमाया ॥३

संकोचभृन्पद्मधुरा पुरा तु कुमुद्वती मालिरितानुमातुं ।
सुधामसत्कारवतीं निरुच्य स्फुरंति सत्कारमहिम्नि रूच्यः ॥४

तां सम्पदामभ्युपगम्य धात्री सम्वाधमध्यादुपभोगपात्रीं ।
ततः समुद्धर्तुमिवाभ्यवाञ्छच्छनैरसौ निस्व इवाध्वयात्री ॥५

सहालिभिः पार्श्वमुपागमि प्राक्ततः शनैस्तेन तयैकया स्राक् ।
क्क मायिना तां च नियुज्य बालावशेषितात्मैकसुहृद्रसाला ॥६

अथास्य दोषा रजनीव राज्ञ उरीकृता सत्कृतसूक्तिभाग्यः ।
निरुक्तवेशाभरणैः समुक्तैः समन्ततः पीततमाभरूक्तैः ॥७

महाशयोऽगस्त्य इवैप वारां निधिं स्वसात्कर्तुमगादिहारात् ।
अजायनाद्वीणरसर्द्धिरेपा योगोनयोः स्फूर्तिकरो विशेषात् ॥८

योगस्तयोः कौतुकमित्यथोधाद्यस्याणिकायां गणिका अबोधः ।
न यद्विचारश्चतुरैरवापि लेभे मुनीनां न मनोऽप्यपापि ॥९

सिंहासने स्थातुमथानुयोग्ये योग्ये नृशार्दूलवरेण भोग्ये ।
कुरङ्गनेत्राधिकृतापि नेत्रा शशाक सा कम्पवती न जेत्रा ॥१०
दिशां च यामादरभावकर्त्तासनेऽपि तन्थौ परिरभ्य भर्त्ता ।
न तामुपादष्टुमहो मनीषामवाप सम्यक् स्मयगारिणी सा ॥११
सदस्यदः शीलितमेव मालाक्षेपान्मकं ज्ञातवतीव बाला ।
तत्त्वापलं चापललाभसारं दशापि लब्धुं न शशाक मारं ॥१२
मास्तूतसुस्निग्धतमेऽत्र हृद्यान्यस्तं दुराकर्षिमितीङ्गकृद्धा ।
चापल्यचारुप्रियसाद्व्रजन्तं प्रत्याचकर्षार्द्धपथा दृगन्तं ॥१३
स्वाङ्गं प्रदातुं भवतीव वामानुयाच्यमानाय पुनर्न वामा ।
राज्ञे किलाज्ञेव पुनर्नतामामकौ ममाग्रव्यपुनीननामा ॥१४
उत्थातुमर्हः स्तनपो हरारिर्ह्रिया भयेनापि पुनर्न्यवारि ।
यथा कुदृष्ट्या दुरितेन सम्यग्गुणः पवित्राभ्युदयैकगम्यः ॥१५
ह्री क्रीडितुं स्थातुमथात्र कामः न मन्दिदेशाव्जदृशः स्म नाम ।
प्रत्याव्रजंन्यर्द्धपथाद्धि कामाम्निरश्चरन्तोऽपि दृगन्तवाणाः ॥१६
तन्वी लतायां क्वचिदेव गूढेङ्गकेऽपि दृष्टिं निदधत्यमूढं ।
तामागतां धर्तुमिवावचारांशुकेन नत्राम्बुजलोचनारात् ॥१७
नापोपकण्ठं सहसोपकण्ठीकृतापि यूना पिकमञ्जुकण्ठी ।
नैकासनैकासनितापयमुग्धा मंशायिना वाचयतेषु मुग्धा ॥१८
लुप्ता न संकोचतती रमायाः कृताः प्रणेत्रा बहुशोप्युपायाः ।
अपत्रपा स्यादिह सा त्रपापि तेनाथ भूयो गुणसंकटापि ॥१९
आयाति नाथे सुतरां निरस्ता वागादिसख्यः खलु यास्तु शस्ताः।
लज्जापलज्जा भवतीव कान्तसमागमेऽस्थाः समगादुपान्तं ॥२०

अपा अपायिन्यपयातु केन क्रमेण कृत्वेति सुवर्णकेन ।
श्रीवारिदेनानुनयान्वयादि नदीत्वदीना सहसोदपादि ॥२१
इवालिरस्मीह तु कौतुकाय लताङ्गि ते जातु नवास्त्वपायः ।
नयति विश्वासमयेऽभिनेतुम्तान्नं तुमामीन्सुवचोऽयनं तु ॥२२
न याचिता सा सुरताय याचमदात्तदाऽस्वादिमुहुस्तवा च ।
जयेन येनासि समानमाना जानामि नानादरिर्णा रतौ ना ॥२३
समाह सा सम्प्रति नेति नेति स म्मामृतेनेव मुदं समेति ।
अहो भवत्या भुवि न द्वयेन समर्थितं मल्लपितं हि तेन ॥२४
सा काममुत्सङ्गकृतापि नेन माऽऽकाममुत्सङ्गकृताऽपि तेन ।
वाञ्छामि बालेऽन्तलतामनोहं वाञ्छामि बालेन्तलतामनोऽहं ॥
स्खलत्तदन्यश्रवणावतंसानुयोजने दत्तशयद्वयं सा ।
मुखं तिरः क्लृप्तवती सुगात्री भर्त्रे कपोलस्य बभूव दात्री ॥२६
दिने तु नेतुर्विरहासहन्त्वान्निशः प्रभाः सङ्गदिशः स्मरंती ।
दिनोदयं सा पुनरिच्छति स्म स्मरक्रियां भर्तुरनुत्तरंती ॥२७
निचुम्बनं ह्रीणतया नतास्यास्विन्नं हृदीशप्रतिबिम्बभाष्यात् ।
सम्मुखमप्याशु मुखं सुखेन बाला ददौ चुम्बनकन्तु तेन ॥२८
रतिह्रियोः प्रेङ्खणकारिणीशान्वाशाजुषः कुण्डलकद्वयी सा ।
तिरोनताभ्युन्नतवक्त्रभाजस्तुलेव लोला सुतनोः रराज ॥२६
विचुम्बतोधीशमुखस्य शीतकरत्वमित्युक्तवती सतीतः ।
सत्वोद्भवद्वेपथुका तु तानि वितन्वती सम्प्रति सीत्कृतानि ॥३०
न याचनात्सन्ददतीं कपोलमथान्यहृत्कां स्मरसिन्धुकोलः ।
कृत्वा तदादायसा(?)सीस्मियेन किमित्थमुक्तिं गदितास्मि येन ॥३१

ह्रीणां च वीणां कुरुषे न गात्रा न कौमुदीवासि मृदुस्मिता वा ।
अथाद्य मूकासि कुतोऽप्यनूकात्त्वतान तामित्यपि वावदूकाम् ॥३२
वाणी कृपाणीव न कर्कशार्यास्मि कौमुदीवन्न कलङ्किभार्या ।
नूनं तनुं भो समयानिवार्यात्रपात्रपायाच्च कुलीननार्याः ॥३३
पत्या चरन्त्यादरिणी निपीतरदच्छदप्रोञ्छनकारिणीतः ।
परं न तस्यैव हि रागभागाभिव्यक्तये स्वस्य हृदोऽपि त्यागात् ॥३४
बलादुपात्ताधरचुम्बनाय नता निपीता दृशि सस्मितायत् ।
धवस्य दृष्ट्वाधरमात्ततुत्थं विधोः कलेवाब्धिमुताह सून्थम् ॥३५
सारोऽभ्युदारो दयिते तवायं हारं समारब्धुमिति द्रुमायं ।
आरभ्य नाभेः रसिकेन सम्यगाकण्ठमाश्लेपि वधू विनम्य ॥३६
किलाभिभूतं स्मरव ह्नमत्यादराद्धसन्त्या हि विभूतिमत्याः ।
विकाशयामास शयाशयेन यथापर्शेत्यं भवता जयेन ॥३७
शनैश्च पश्चान्निरकाशितेन भी ह्री च नेत्राशयचालनेन ।
रहोमहोमन्त्रमिदाविदारादपूजि साध्व्या स्मितपुष्पधारा ॥३८
जयाननेन्दुः सुदृगास्यपद्मश्रियान्वयं प्राप्य मुदंकसद्म ।
सानङ्गता किन्न यशोधनायदलम्भि वैरस्य विशोधनाय ॥३९
सुधाश्रयं प्राणधरं समाहावराङ्गपानेषु कृतावगाहा ।
सङ्कारतप्रान्तगतं मुहुर्वाऽवदत्तरामुद्गतवेपथुर्वाक् ॥४०
स्मितामृतांशैः परितापितत्वात्तवोरुसम्वाह नमेमि मन्वात् ।
इत्युक्तिलेशेन तदुक्तदेशे करं पवित्रं कृतवानशेषे ॥४१
आप्तुं कुचं हेमघटं शुशोच एकोऽरं कंचुकमुन्मुमोच ।
चुकूज तन्व्या मृदुबंधनश्चाभृद्रोमराजीप्रतिबोधभृद्धा ॥४२

सदंचलं मंग्रनि वद्धमीशकरोऽङ्गनावक्षसि तूद्यमी सः ।
अभूत्तदाच्छादयदाशुमानं भुजालताभ्यां कुचकुड्नलान्तं ॥४३
नर्खरक्षानीह पयोधरं तु समुद्गमः श्रीपरिणामनेतुः ।
तृतीयमम्पांरुपपारमेतुममानि हेतुः किल मैव सेतुः ॥४४
समम्न्यमुष्या हृदये मुकारैः समादरः श्रीगुणिनामुदारं ।
कुतोन्यथा स्थानुमशाक्ति हारैर्गुणच्युतैर्नाद्य हताधिकारैः ॥४५
मेरोः शिलामूलघने प्रियायाः कुचोच्चये सोमतुजोभ्युपायात् ।
भूयोभिपातेन नखैः प्रकाममवापि भुग्नैर्नखरेति नाम ॥४६
सरोपदोपापनुदोऽपि वारिर्यतोऽस्ति लब्धा खलतेन खारी ।
सदचरामञ्जुपयोधराभूर्विलोकयामीत्युदिताचराभृत् ॥४७
एवं यमुत्तानितजन्मपत्रामत्रासयन्नाह पुनः पवित्रां ।
नवग्रहोत्साहसयो जयोऽपि नयेन संलग्नकथा व्यलोपि ॥४८
खिन्नास्य केनासितकेशि नीचैर्गतेन दोपाकरतापि येन ।
निपिद्धयते किन्तु तनौ नवोच्चैस्तेनेन सम्यग्गुरुणा हितेन ॥४९
पयोधरालिङ्गन एव कृत्वा समुत्करं गोमयमात्तसत्वात् ।
लसत्यथास्यामृतकारिकामधेनो त्वयारब्धमिदं ललाम ॥५०
रते च ते संकुचतीह हृद्यत्कामारमुत्सृज्य तु मेऽतिहृद्यं ।
गुणानुरागी करमर्पयामि अस्योपकारं न हि विस्मरामि ॥५१
सारोऽप्यहो सानुमतीव तेन वाहेन कृत्वा नवलावलेन ।
सदास्यशीतांशुनिचुम्बनेच्छानुभूतयेऽङ्के स्वयमुन्नतेच्छां ॥५२
पयोमुचः स्पर्शकृतेति मन्ये कलप्रवालेन कुलीनकन्ये ।
तदेतदागोऽत्र विशोधयामि समर्प्य सन्मौलिमणिं नमामि ॥५३

दृष्ट्वापि दृष्टा मुहुरुत्सवेन यालिङ्गितालिङ्ग्यभृशं धवेन ।
अचुम्बिवाला परिचुम्बितापि सा नूतनातृप्तिरनूतनापि ॥५४
ओस्साहृताऽनेन किलेति कृत्वा ममेभकुम्भस्य तदेकसत्वा ।
विमर्दयामास कुचाङ्कमस्याः स कामरामा सुषुमैकमघ्याः ॥५५
न सा कृशाङ्गी विजगाह सम्यक्प्रियस्य वक्षः परिणाहरम्यं ।
स्पृष्टुं भवानुच्चकुचं सुकेश्याः शशाक किं तत्परिरम्भणेऽस्याः ५६
वारा यथारात्प्रतिरोमकूपमपूरिवारापि तथापि भूपः ।
नवारितामाप पुनीतकेश्या दत्वा दृशं कौतुकतोङ्ककेऽस्याः ॥५७
कृष्टेंशुके गूढमुरो भुजाभ्यां स्रस्तेन्तरीये वृतजानु नाभ्यां ।
बद्धे व्रणं नेतरितन्प्रतीपकर्णोत्पलेनास्तमितः प्रदीपः ॥५८
हृतप्रदीपेऽपि मयास्ति पीततमा निशा किं खलु सम्मतीतः ।
वालेति साश्चर्यसिता न नेतुरदादृशं मन्मणिमौलये तु ॥५९
न्यधात्मनो मूर्धमणौ स्वकर्णान्किञ्जं च मन्कतुं मिषात्तवर्णा ।
भूमण्डलेऽस्मिन्मणिकुण्डले तु ममुद्धरन्ती ग्रुनिदानहन्तृ ॥६०
चरन्नरं प्रेमिकरः प्रतीत्य नाभिकूपे पतितो गभीरे ।
काञ्चीगुणं प्राप्य पुनः स नाम जवेन तन्व्या जघनं जगाम ॥६१
प्रियाश्रितैः प्रागतुषन्नरेन्द्र आभूषणौघैः परिणामकेन्द्रः ।
तदा तदङ्गे व्रणविघ्नकृद्भ्यस्तेभ्यो विरक्तोऽपि विकारभृद्भ्यः ६२
तयोस्तदानीमुभयोश्च दन्तक्षतप्रभृत्यप्यभजत्पदत्वं ।
तथा यथा काल्पितकोलकादिशाकेऽर्पितं नान्वयते कटुत्वं ॥६३
सुकण्ठकम्बुर्यदपूरितेन निरस्य लज्जायवनीं स्वमङ्ग ।
स्वेदोदपुष्पं सुदृशः मदङ्गे रतिः स्वयं मञ्जु ननर्त रङ्गे ॥६४

सुमेपुरूच्चैम्तनशैलमन्वाम्थितो यदासीदनुकर्णधन्वा ।
परागरङ्ग यत्रमिति श्रमाम्भोऽनयोर्जयद्वीरभुवोत्रपाम्भो ॥६५
ननूदरिन्वन्तनुमध्यमेनन्किं मुष्टि मेवाह्यमपीतिमेतत् ।
शतच्छदोदारकरम्य नीविं निराचकारेति मिषात् स जीवी ॥६६
पुरारुणादुगाढमथाद्दढेन करेण नीविं च न नेत्यनेन ।
पदानुवादेन रते रसाक्षिण्यभूदिवानन्दनिमीलिताक्षी ॥६७
वलित्रयोपामितविग्रहाय करद्वयी चापलमाप सा यत् ।
समेखलं किन्तु लभे तृतीयं सुदीर्घसूत्रं पुनरन्तरीयं ॥६८
स मन्तरीयोद्भिदि सम्पतन्ती त्रपापगायां स्मरवैजयन्ती ।
प्रसङ्गतः मङ्गतकण्टकत्वादभूदिदानीमुपलब्धसत्वा ॥६९
सुलोचनासोमसुतावितम्तु रतिम्मरो यत्प्रतिपत्तवस्तु ।
अभूत्प्रतिस्पर्द्धितयेव रंगभूमाविनः स्फूर्तिकरः प्रसङ्गः ॥७०
पत्यौ परारंभपरं भिजातमानन्दसन्दोहमिहाभ्युपातं ।
अमं रमन्तः परिमायितुं द्रागियं च कम्र्यं किल हर्परुन्द्रा ॥७१
नरं हरत्यंशुकमाततान कोदण्डकं कर्णपयोभुदा न ।
नीव्यांकरं कुर्वति सन्ददाना स्मरं सुभास्त्रं किमिवाह मानान्॥७२
शास्तारमाप्त्वानुनयन्तमस्मादिगम्बरत्वं समगादकस्मात् ।
आनन्दसन्दोहपदैकभूवन्नसान्वभूद्यन्किमतो बभूव ॥७३
एकस्य मुक्तावलिरेव सारं बभूव भूषाच्युतहारचारं ।
च्छायाच्छलेन श्रमवाः प्रसारहृद्यन्यदीयेऽपि तयोरुदारं ॥७४
मिथस्तयोरुज्वलबाहुवल्लिमतल्लिकालिंगनमण्डली या ।
हेमाब्जिनीवालमृणालजन्मा पाशो रतीशस्य स एव जीयात् ॥७५

योग्येषु भोग्येष्वपि सम्प्रतीकेष्वन्येषु संप्रीतिमताजनीके ।
रुचिर्हि सर्वप्रथमाधरं तु माधुर्यमत्रात्र समस्तु हेतुः ॥७६
सपद्ममादष्टवति प्रवालोपमं तु नेतर्यधरं त्रपालोः ।
अकूजि सम्यग्वलयाकुलेन ससाध्वसेनेव पुनः शयेन ॥७७
प्राप्योपहारं कमितुः करन्तु तन्व्याः प्रसन्नादुरसोऽयतन्तु ।
मुक्तावलीहास्यपरम्परा वा पपात तावद्विशदस्वभावा ॥७८
वधूरसः स्वामिकरप्रचारमवाप्य सद्यो विजहार हारः ।
स्वेदोदबिन्दूच्छलतोऽत्र मुक्ता माला विशालापि बभूव युक्ता ॥७९
दृढं च यूनः करचारमाप्त्वाप्यपत्रतावापि किलाकुलेन ।
कुण्ठात्मकोरः कठिनेन तन्व्यास्तथापि नाना मिमनाक् चेन ॥८०
अकारि सच्छिल्पकृतः स्वराग्रैर्नखैर्विसुग्नैः कथमप्युदारं ।
स्वेदोदसिञ्जन्मृदुभिः पदं दोर्मूले शिलोत्तानतिभे सदन्दोः ॥८१
आवर्तवत्यां वलिनिम्नगायां मध्यं गतः पीनपयोधरायाः ।
समन्दुकूलं स समच्छदं वं चकार वाराकरधारमेव ॥८२
करस्य संहर्षधरस्य नाभ्यामाकर्षतो वस्त्रमदः कराभ्याम् ।
विरोद्धु मेतां कलिमप्रदृश्यां काञ्च्या शिशिञ्जे वलयैश्च तस्याः॥८३
दीर्घाङ्गुलिः संगवतो नृशद्रः करोऽतिरिक्तोऽप्युदरं दरिद्रे ।
विसंकटं श्रोणितटं तदर्थवत्याः समाप्तुं किमभून्समर्थः ॥८४
निलेतुमन्तस्थितरंतरस्याभिवाञ्छतः श्रीमिथुनस्य यस्स्यात् ।
विरोधहेतुस्तनकप्रियोरः समुद्भवः स्पष्टतया कठोरः ॥८५
दत्तोथ कचागुणतत्परेण पीनोरुकस्तम्भसितः करेण ।
परामृशन्प्रेमयुजो रराज विमोचयन्त्या मदनेभराजम् ॥८६

प्रथान्मजन्मानमपेन्य दैवसम्वेदकः श्रीसुदशस्तदेव ।
रदच्छदे स परिणामसर्गं लिलेख दन्तैर्वरमष्टवर्गम् ॥८७
कुचोपपीडं परिमृष्टमिष्टजनेन तन्व्या यदुरोविशिष्टं ।
स्वतः सपत्न्या हृदयं विभिन्नमितोमुतः पर्वत एव किन्न ॥८८
पृष्टे पुनः कञ्चुकमुक्तये तु ग्रहिण्यनी पाणिमपि स्वनेतुः ।
मनोमृगं हन्तुमभान्सुरोपा तृणाङ्कुरं कृष्टवतीव भो सा ॥८६
प्रत्युक्तवान्नाहमिनः स्मरामि यतो नरवात्र विभासि नामि ।
सम्वद्गतामति करो यथा मे स्तनोऽप्यमुक्तस्तकिन्नरामे (?)॥ ६०
विलासवन्त्या उदितावकस्मात्पयोधरौ श्रीकलशाविवास्मात् ।
वितेनतुर्मङ्गलमुद्यनस्य जगद्विजेतुं मदनस्य तस्य ॥६१
बलादुपालभ्य मुखं प्रबन्धकर्तर्यथो चुम्बति नीविबन्धः ।
सुमेषुचापभ्रुव एवमापाङ्कयेव सद्यः शिथिलत्वमाप ॥६२
राज्याभिषेकाम्बुघटौ स्मरस्य निधानकुम्भाविव यौवनस्य ।
रतेरिनाक्रीडधरौ घनेनाम्युद्घाटितौ स्वामिनर्का जवेन ॥६३
स्तनौ सुरोमाञ्चनयातपानौ करौ स्फुरद्धस्तनलौ च दीनौ ।
कुतोऽत्र पयोप्तिमगच्छतां तौ ननभ्रुवश्चावनिपस्य भान्तौ ॥६४
अपत्यभावान च रोमराजीतो जागरिन्वन्नतमित्यभाजि ।
तयाथ मुक्ताफलताप्यधारि समुत्थघर्माम्बुलवप्रकारिः ॥६५
हरत्यधीशे वसनं कटीतः ह्री यातु विश्लेषविरोधिनीतः ।
स्मिताम्बुभिः सिक्तमुरोजदेश बिम्बं विनम्राननया तदेव ॥६६
स्वमन्तरार्द्रत्वमुताह सम्यगनारतप्रेमरसैकगम्यम् ।
वपुर्दृढाश्लेषिणि यूनि वासः क्नोपं पयोमुञ्चदनंगभासः ॥६७

शरीरमेतद्घनसारविन्दोः समेत्य सद्व्याञ्जनसत्त्वमिन्दोः ।
तुल्याननाया अमृतस्य धारापिगल्यजाता द्वितयीव मारात् ॥९८

चित्तेशचन्द्रस्य करोपलम्भे आनन्दसिन्धुर्द्रुतमुज्जजृम्भे ।
बहिर्बभूवाब्जदृशां सदेवं स्वेदापदेशादुदकं नदेव ॥९९

स्तनौ वराङ्गं च परीच्छताहमुत्सृष्टमीशेन रुपैत्युताह ।
विलग्नमम्भोजदृशोत्र तेन भ्रूभङ्गमाप्त्वापवलिच्छलेन ॥१००

महाशये कूजति कण्ठकम्बौ कांच्यां विपञ्च्यामपि स क्कणन्त्यां ।
लासं गुरुस्तं भरतोनितम्बश्चकार चारुस्मरवैजयन्त्यां ॥१०१

भ्रूगण्डतुण्डाधरबाहुदण्डावलग्नकुण्डादिनिचुम्बनेन ।
सता रतिं क्रुद्धवधूनिषिद्धां कृतोचितिः सान्त्वयितुं श्रयेन ॥१०२

अनादिरूपः सुदृगित्यनेन ह्यनन्तरूपत्वमितं जयेन ।
अनाद्यनन्ता स्मरति क्रियास्ति तयोरनङ्गोक्तपथप्रशस्तिः ॥१०३

वामा न वामापि यथोत्तरं सारक्तोऽभवच्छीह रितोऽपि वंशात् ।
पीतो ह्यपीतो मधुराभिराभिः कषायलः कामधुरः क्रियाभिः १०४

शाटीमिव बहुगुणां रतिं तु ततो निशायामप्यधिगन्तुः ।
संकुचतातिशयेनानापद्ध्रीणा स्मरश्रीणः समवाप ॥१०५

सद्यस्तनस्तबकभारमहोदयेन,
पुष्टापि सज्जघनमूलशिलोच्चयेन ।
जानात्र संकलितरूपगतेन कामा,
रामात्रिभूचितविहारवनानि वामा ॥१०६

सुरतसमुद्राद् हृदयामत्र खलु शर्मवारिनिभरणं ।
अशमित्यर्थान्मुदृशां समभाद्गद्गदगिरोद्धरणं ॥१०७

सुरनरङ्गिणि उत्कलिकावनीतरणिरद्य न विद्यत इत्यतः ।
पृथुलकुम्भयुगं हृदि सन्दधद् घनरसस्य स पारमुपागतः ॥१०८
स्मराध्वरे नर्पितमिष्टमश्वकं समर्पितप्रीति हि देव पश्चकं ।
विभूषिभूराभरणैरिहाधिकाप्यधारि निस्वेदपदात्तदाशिका ॥१०९
नेपावेगं तावकं सम्विमोढुं शक्ता नैनां खेदयेतीहवोढुः ।
कर्णोपान्ते रत्युदात्तस्य गत्वा प्राहोढाया नूपुरं नाम सत्वात् ॥११०
स्वाद्यं मृदुलमध्यायाभान्तमास्येन्दुमश्नतः ।
सत्मुखं जनमन्वं तु सुलभं समभूदतः ॥१११
अंचलं च यदा कर्तुं कामोभूत्तस्य वारकः ।
सुवर्णघटकन्देनोरस्तस्या गुरुनामगात् ॥११२
स कामादावथ क्षान्तां समुपेत्य तदन्वयं ।
अन्ततो वंचितं कृत्वा रङ्गतन्त्वमितोऽभवत् ॥११३
यथा सदैवास्य कथासुवर्षासौदामिनी साप्यभवत्सहर्षा ।
यदापि सा कल्पतला प्रकर्पं तदंघ्रिपोप्यम्बरमाचकर्षः ॥११४
तां माननीयां समयन्तमापः स्वभावतः सानुनयत्वमाप ।
रूपस्थली सा पुरपोऽत्र जातुचिदूनभावान्न वपुस्तदा तु ॥११५
विधुर्यदाकामधुरानदीनस्वरूपतामाप तदाकुलीनः ।
कलान्वया चेत्पृथुरोमभावात्सासीत्समुद्रो मुदितस्तदा वा ॥११६
उदयन्तं सरोमध्यमन्यजेनान्वितं श्रयन् ।
तृष्णावानेव सोप्यासीदपि कञ्जमुखो भवन् ॥११७
अधरं मधुरं शश्वद्रमणीकं समाश्रयन् ॥
समन्तात्पवनोप्यासीदपिपुण्यजनेश्वरः ॥११८

आननेनारविन्देन शर्वरी सोन्वभून्मृदे ।
सदामलक्षणं वाला तद्वक्षस्समभावयत् ॥११६

वलिसद्मोदरं नाभिजातगतं नतभ्रुवः ।
वामनोहरभावेन नरस्तावत्समध्यगात् ॥१२०

तदेकव्रतिना भानुमानितां तामपश्चिमां ।
सरोमाश्वतया गत्वा साकुशेशयताश्रिना ॥१२१

नवनीतं वपुस्तस्याः पूतपुण्यपयोभवं ।
समाराधयतो जाता सुतक्रमहिता स्थितिः ॥१२२

मुखं मुकुलमाचुम्बन् कुलीनो न ततां नयन् ।
समग्रभावतो गत्वा शान्तनामाप सुभ्रुवः ॥१२३

योपाया अधरं वरेण कलितं सद्यो दृशामीलितं,
निर्यातं रदरोचिषाब्जरुचिना हस्तेन वा रोपितं ।
एवं सन्मणिनिर्भिन्नैश्च वलयैराक्रन्दितं वेगतः,
सन्त्यन्यव्यसनातुरा हि भुवने ये साधवस्ते पुनः ॥१२४

रतान्ते सा भूयो दशनवसनं प्रोञ्छितवती,
विलोलैर्नेत्रान्तैः शयकिशलये नोज्ज्वलद्युतिः ।
विहस्यैवं रेजे नरलितदृशा तत्परिगतिः,
मुहुर्वक्त्रं पत्युः शिथिलसकलाङ्गीक्षितवती ॥१२५

रत्यन्तं गत्वाप्यददाने याचन्त्या वसनं वहुमाने ।
सरोपकुटिलं सम्पश्यन्त्या रुचिरकचिरनाथवा हसन्त्याः ॥१२६

चापलमहो मृदुदृशः कलितं जघनेऽनपराधिनि तत्पतितं ।
तरलेनापाङ्गेनविचलितास्वीचक्रे घणपरमोक्षनामिनः ॥१२७

पतिनामलमेखले स्त्रिया पृथुले श्रोणितलेऽन्वभावि या ।
नखमण्डलसन्ततिर्हि यत्परितोषाप च सप्तकीश्रियं ॥१२८

पुष्पवृष्टिरिव पुष्पधनुमना स्वयमुन्नत उरोज आशु कृता ।
स्मरमंगरे सुकोमलवपुषः श्रमवारितनीरतिकीर्तिमुपः ॥१२९

नयनन्तु निरञ्जनं परं श्रुतिसंसेवनहेतुनेत्यरं ।
किमु मुक्तिमितेन्दिराजितः कवरीस्नेहसमान्वितभितः(?) १३०

निस्तिलकं गोधिकमधुरञ्चापयावकं चामरप्रपञ्चा ।
वेणीश्रेणीमुदामियन्नूरोजे स्वेदजललवाः सन्तु ॥१३१

अनुरागवतां विरागिणामियमेकापि विभवरी नु मा ।
रजनीसुरतानुपङ्क्तिणामिनमेपामभवत्तमस्विनी ॥१३२

इतरेतरमञ्जुनां सुखि-त्वान्नयनेष्वानिशमेव पूरयित्वा ।
भरितानि च तानि सम्वृतानि मिथुनेनेह तकेन कोमलानि ॥१३३

सुतनोस्तनमण्डले शयं मृदुले गण्डतले मुखं नयन् ।
निजजानुमिहानुजानु स स्वपिति स्मेति सुखेन वा युवा ॥१३४

मुदितनदननीपे नाभिकायाः समीपे,
समितनिखिलदीपे कामदेवान्तरीपे ।
प्रचलदलसहस्तं योद्ध रात्रावनन्यः,
स्म लसति वनितायाः सार्द्ध निद्रो स्म धन्यः ॥१३५

अनङ्गसौख्याय सदङ्गरम्या सोच्चैस्तना नम्रमुखीति रम्या ।
विभ्राजते स्माविकृतस्मररूपानुमाननीया महिषीति भूयात् ॥१३६

सानुनयाधिगमा महिला सा मणितत्वार्थमिता मृदुहासा ।
बहुलोहमयः पार्श्वमुपेतः काञ्चनरुचिं गतः स तथेतः ॥१३७

पीता सुरोचनापि जयेन नीतानुरागमप्युत तेन ।
हरिताश्रमेण यात्र रमेदं धवलत्वं स्वात्मनो विवेद ॥१३८

गोरी सम्प्रति साशु भारती राजते स्म खलु या रमा सती ।
हरितवसनमधिगम्य समस्यां स्मरति च पुरुपोत्तमेत्र तस्याः ॥१३६

आसीत्तु वामा पुनरत्र रामा धर्माम्बुयानाप्युतकम्पकामा ।
भियेव वा कण्टकिताङ्गसाराथ सा ततः सीत्करणाधिकारा ॥१४०

समाप्युरोजेन खलक्षणापि वृतिर्विभो नं नखलक्षणापि ।
बालाह रोपा तव साधुता वा ममायशर्यदि साधुता वा ॥१४१

सुप्त्वा कामकलाश्रमात्कुलवधू पूर्वं प्रबुद्धापि वा,
रन्तुः श्रीसुखनिद्रितस्य ललितं दोःपाशसम्बद्धमं ।
तस्थौ निश्चलसत्तनुर्विलसतः संच्छेतुमेपाधुना,
नागच्छत्सुविचारचेष्टितमना वाञ्छैकसंभावनां ॥१४२

(सुरतनामनानामपङरचक्रबन्धः)

श्रीमान् श्रेष्ठिचतुर्भुजः स सुषुवे भूरामलोपाह्वयं,
वाणीभूषणमस्त्रियं घृतवरी देवी च यं धीचयं ।
अस्मिँस्ताद्विहिते निगंति दशमः सर्गाधिकांङ्क्षप्रियः,
शिष्टानां सुरतोपहारकरणः संयुक्तयुक्तक्रियः ॥१४३

इति श्री वाणीभूषण-ब्रह्मचारि-भूरामल-शास्त्रि-विरचिते
जयोदयमहाकाव्ये सप्तदशः सर्गः

# अथ अष्टादशः सर्गः

श्रीयुक्तपाठक शृणुत विनोदकृत्ते सिद्धिं गतैर्हत इव द्वितयस्य वृत्ते ।
ऋद्धिं यतीन्द्रवदुपेतरि सूर्यकान्ते वृद्धिं समर्णवदते तमसि क्षपान्ते ॥१

†स्वस्तिक्रियामतति विप्रवदर्कचारं भद्रं सुगोहिवदिते कमलप्रकारे ।
स्वस्तु स्वनोद्य भवितुं जगतोऽधिकारं
सर्वत्र भाविनि किलामलताप्रसारं ॥२

सूक्तिं प्रकुर्वति शकुन्तगणैर्हतीव
युक्तिं प्रगच्छति च कोकयुगं सतीव ।
मुक्तिं समिच्छति यतीन्द्रवदब्जबन्धे
भुक्तिं गते सगुणवद्रजनीप्रबंधे ॥३

लुप्तोरुरत्ननिचये वियतीव ताते चन्द्रे तु निष्करदशामधुना प्रयाते ।
घूकेऽपकर्मनयने द्रुतमेव जाते मन्दं चरत्यभिगमाय किलेति वाते ॥
सुप्ते विजित्य जगतां त्रितयं तु कामे लुप्ते तदीयधनुषो विरवेऽतिवामे
उप्ते रथाङ्गयुगचञ्चुपुटेऽभिरामेऽहोरात्रकस्य मधुरे चरमेऽत्र यामे ॥
नन्दत्वमश्नति विधोर्मधुरे प्रकाशे पर्याप्तिमिच्छति चकोरकृते विलासे
सस्पन्दभावमधिगच्छति वारिजाते सर्वत्र कीर्णमकरन्दिनि वाति वाते
यत्नाच्चि चाचिपदहोपलकांशमासामेणीदृशान्तु रतिरासवृहद्विलासात्
प्राभुज्जवाद्रजनिनिर्गमनैकनाम सन्देशकस्य पटहस्य रवोऽभिरामः॥
विश्रान्तिमभ्युपगते तु विभाततूर्ये श्रीमेदिनीरमणधाम समाययुर्ये।

† सुष्ठु अस्ति क्रिया, स्वस्तिवाचनं च ।

द्युता जगुः सुमृदुमञ्जुलमत्सवाय रात्रिर्व्यतीतिति विनिवेदनकारणाय
त्वं वासुरासि मदनैकधुराशिकाभिर्हे देवि सेवितसुखासुखवासिकाभिः
लब्ध्वाम्बुकन्द × गुणमन्यजनाय नाम
+ मोहंकरीति तव संस्तवनं श्रयामः ॥९

एषोऽस्ति मङ्गलमयः समयः प्रभात-
स्तत्तेऽर्थिनीह वशिनः शशिनः प्रभातः ।
ऐच्छन्मुखश्रियमिवानधिकारितातः
विम्बं पलाशदलतामयतंथवाऽतः ॥१०

शाटीमिता कुसुमितामसकौ विमात-
सन्ध्याप्यवन्ध्यभवनाय सुभाविताताः ।
मुञ्च चणं खलु विचक्षणदक्तयाऽत-
स्तामीश्वरः सफलयेदिति तं कृपातः ॥११

श्राद्धे यथावनिमहेश्वरि विप्रजातः
पूर्णोदरः ससुरभिश्च विभाति वातः ।
कोकोऽपमङ्गतवरोधृतमोदकोऽतः
सन्तोषिणान्तु विनतिः कणकायनोऽतः ॥१२

कृत्स्नप्रपालननिमित्तमिहाङ्घ्रिमातु-
स्त्वत्तोद्यतस्य तु परिन्यजनं प्रयातु ।
अभ्यागतो रविरुपात्तकरप्रसारः कस्माचवापि महती दृढमुष्ठिताऽरं ॥
हे नाथ नाथ भवतो भवतोऽपि शस्यरूपस्य पश्य कथमद्य किलाशु भावः

---

× अमुकं दगुणं च, पद्मं कृष्णतुल्यं ।
+ माया लक्ष्म्या अहंकरी च ।

मंतृप्यते भवभृतां भवतात्समायकायस्य यस्य बहुधान्यहितप्रभावः
मंदाग्निरुग्युगभवद्दिननाथकान्तासन्दर्शितश्वयथुशार्वरमप्युपान्तात्
नेत्राण्यमूनि तिमिराख्यमथाप्यधूर्ं दोषं किलौषधिपतौ प्रतियाति दूरे
राजापि सन्मुमृदुलोकमुदास एव सन्देशमाप्तुमयते शुचिसंपदे वः ।
वत्सार्थमेति भुवि गौरवमाप्तमुक्त वारोन्त्यजस्य सहसा स्फुरणार्थमुक्त
चन्द्राश्मतः प्रचलदम्बुभरं चकोरदृग्भ्यां समाद्दतमनङ्गसुरूपचौर ।
कोकद्वयोक्तहृदयस्य तथैव वह्निः
स्माप्नोति किन्नरविकान्तमणिः सदह्नि ॥१७

निर्यातु जातु न तमोप्यपराधकारि स्रागभ्युदेति भगवन्स तमोपहारि ।
इत्यर्गलायितमुदारविचारतल्या चक्राङ्गनाम मिथुनेन न किं जगत्यां॥
एणीदृशां रतिरसप्रसरोपभुक्तैः समृष्टपत्रततिभिः शुचिभिः समुक्तैः ।
गण्डैस्तकैः प्रहसितः सकलङ्कराशि-
र्निर्जीर्णकोहलफलच्छविरिम्बमासीत् ॥१६

तां पुष्पिणीव्रततिमभ्युपगम्य सम्यक्
शुद्धेन तेन पयसाप्लवनं वरं यः ।
सम्प्राप्तवान्नपुनरप्युपसर्ग एप
स्यान्मन्दमित्थमनिलोव्यचर(श्चरति)न्प्रगेसः ॥२०

किश्चाहतः स्तनतटौ निपतन् विलग्ने
योपाजनस्य परिगर्तितनाभिदघ्ने ।
रुद्धो नितम्बशिखरैरिति सम्प्रबुद्धः
मंदं प्रयाति पवनः स पुनस्तु शुद्धः ॥२१

सम्पल्लवं कविरिवाब्जततिः प्रभाते
सम्पल्लवं प्रतिरवैर्लभते यथा ते ।
वाचालतां निशि जगाम तमश्चमूक-
स्तस्मादुलूकतनया कतमश्चमूकः ॥२२
यद्वा यथाभिरुचिसन्तमसं निशीय-
दम्भोरुहाणि मुकुलाञ्जलिभिर्निपीय ।
नाथोद्वमन्ति तदजीर्णतयाधुनाऽर-
मेतानि निर्यदलिवृन्दपदप्रकार ॥२३
श्रीपद्मसद्ममरुताशुतयाविलुप्ता-
हंकारतो विमुखमाप्यथवोपसुप्ता ।
या सालसानुशयितव्यपदेशलेशा-
द्योपालिलिङ्ग हृदयेशनिधिं विशेषात् ॥२४
भास्वानसौ क्वचनयापितसर्वरात्रि-
रम्भोजिनीं विरहतोऽप्यतिदीनगात्रीं ।
अङ्गीकरोति किल सम्भवता रसेन
तां सानुरागकरचारकलावशेन ॥२५
अस्मत्सकाशमसकौ विधुरभ्युदेति
स्वाग्वारुणीमनुभवन्विनिपातमेति ।
प्राच्या परावृतपुनीतरदच्छदाया
यद्वास्तिकान्तिरयि नाथ घृणापरायाः ॥२६
यन्मीलितं सपदि कैरविणीभिराभिः
क्षीणत्रपास्तमितिमप्युत तारकाभिः ।

संचिन्तयन्दयितदारतयेन्दुदेवः
प्राप्नोति पाण्डुवपुरित्यधुना शुचेव ॥२७

श्रीकैरवेषु च दलैर्विनमद्भिरेवमभ्युन्नमद्भिरिव वारिरुहेषु देव ।
तं सन्दधत्सुपरिणाममपूर्णमार-
न्तुल्यत्वमश्नुति मिलिन्द इहाधिकारात् ॥२८

आदित्य + सूक्तविपदोपरतप्रकारं
हे धीश्वरा × सुरहितं सहसान्ध + कारं ॥
दृष्ट्वेव ‡नालदलसद्धसितं विभाति
शोच्या तथास्ति *कुमुदस्य तु मौनजातिः ॥२९

भीतेर्भरं तु कुलटाहृदयेऽवशिष्टं
घूकस्य लोचनयुगे तिमिरं प्रविष्टं ।
बिम्बं रवेरुदयनेन सता विशिष्टं
पश्येव मञ्जुलमहो नरनाथदिष्टं ॥३०

स्नाता सुधाकररुचां निचयैर्दिगेषा
प्राची स्वमूर्ध्नि खलु हिङ्गुललेखलेशा ।
भास्वत्सुवर्णकलशं तु गृहीतुकामा
त्वन्मङ्गलाय परिभाति विभो ललामा ॥३१

यात्येकतोऽपि तु कुतोऽपि विरज्य राज-
न्यात्माधिपेऽपरदिशां प्रतियाति राजन् ।

---

+ सूर्योदयसूचकपक्षिरवविशेषं, पक्षे देवकृतविपत्तिविशेषं ।
× निष्प्राणं, पक्षेऽसुराणां हितकरं । + तमः, पक्षे तन्नामदैत्यं ।
‡ नाल-दल-सद्धसितं, पक्षे नारद-लसद्-हसितं ।
* कैरवस्य, पक्षे तन्नामदैत्यस्य ।

सत्पुष्पतल्पमसकौ रजनी दलित्वा
रोषारुणा विकृतवाम्भरतश्चलित्वा ॥३२
* सद्वृत्तिरञ्जति निशा शनकैः प्रहाणि
किं श्रूयते पुनरुलूक×सुतस्य वाणी ।
कश्चिन्नभो † दय इहास्ति विचारभावा
च्छ्रीवर्द्धमानतरणे रुचिताग्रभावा ॥३३
चन्द्रोऽस्पृशत्कमलिनीमहसत्कमोदि-
न्येतद्द्वयेऽरुणदृगर्यमराड्विनोदिन् ।
स्नागम्युदेति किल तेन कुमुद्वतीयं-
मौनिन्यभूच्छशभृदेति च शोचनीयं ॥३४
रात्रीमुचेऽमलरुचे विरहं विहाय
सन्तमतां द्युमणिसन्प्रणये तथा यत् ।
श्रीचक्रवाकमिथुनं मिलतीदमद्य
राजन्मुदश्रुभरसंस्नपनं प्रपद्य ॥३५
तारापतिर्हि नलिनीर्मलिनीर्विधाय
तत्प्रीतिदेऽभ्युदयतीह न सम्विधायत् ।
तारा निगुह्य सहसास्तगिरिं प्रयाता
जिह्रेति तत्करगता कति वीक्ष्य वाताः ॥३६
निस्नेहजीवनतयापि तु दीपकस्य
संशोच्यतामुपगतास्ति दशा प्रशस्य ।

* तारास्थितिर्नित्यता च ।
× घूकबालस्य कपिलस्य च । † नक्षत्रोदयः, पक्षे भो अदयः ।

संघूर्ण्यमानशिरसः ×पलितप्रभस्य
यद्वन्मनुष्यवपुषो जरसान्वितस्य ॥३७

रात्रावहो पुलकितानिह सन्ति भानि
स्माम्भोरुहाणि किल मुद्रणमाश्रितानि ।
वार्धिन्दुभावमुपगम्य दलेषु तेषां
भिक्षामटन्ति परितो दिवसप्रवेशात् ॥३८

उच्चैस्तनोदयगिरौ करकृत्तु पूषा शस्तानुरागभृदहो वियदेकभूषा।
विघ्नः स्फुरत्तरनखक्षतसम्विधानं
प्राच्या उरस्यवनिराडिति शोणिमानं ॥३९

संसूयते तनयरत्नमपश्चिमातः
संश्रूयते कलकलो †द्विजजातिजातः ।
पाथोरुहोदरदरादलिनो विमुक्ता
आमोदपूर्णमखिलं जगदेतदुक्तात् ॥४०

यत्नोऽमृता + श्रमपरेण च खेन तात
ख्यात प्रभात हविरासन एष जातः ।
भिन्ने भवत्यमृतधामनि नाम शुम्भ--
त्स्वर्णस्य संकलितुमत्र नवीनकुम्भं ॥४१

संहृत्य ❁ वैरजनिमित्यथ वीतराग--
वृत्तिं गतश्चरति सत्स्वभिवृद्धभागः ।

× क्षणिकरुचेः, पक्षे श्वेतशिरसः । † पक्षिणां विप्राणां च ।
+ स्वर्गं, पक्षे दुग्धधाम । ❁ वै रजनिं, पक्षे वैरोत्पत्तिं ।

योगीयते सुहृजलम्बकरः सुवृत्त–
भावेनभानुरपि भो जगदेकवृत्त ॥४२
वीरोदिते समुदितैरिति सम्वदामः कल्यप्रभाववशतः प्रतिबोध नाम
सम्प्रापितं च मनुजैश्चतुराश्रमित्वं
एकान्तवादविनिवृत्तितयासिवित्त्वं ॥४३
कञ्जोच्चयेन विकचत्वमवापि तात सुश्रावकत्वमिति पक्षिवरैश्वथातः
भानोः करग्रहभृतो भुवि धामनिष्ठा-
भैराश्रिताः पुनरिहाध्ययनप्रतिष्ठा ॥४४
भानुस्तपोधन इवायमिहाभ्युदेति निःशर्वरीत्वमपि यज्जगतस्तथेति
कोकः प्रसिद्धविभवो गृहिणीमुपेतः
कौपीनभावमयते वनवासिचेतः ॥४५
आमत्रणार्थमिति चन्द्रमसो रसेन
शंखोऽसकौ ध्वनति सोदरतावशेन ।
औदास्यतो जगदतीत्य विचित्रवस्तु--
गेहाय मानमिव निर्व्रजतोऽन्ततस्तु ॥४६
नक्षत्ररीतिरधुना नभसो न भाति
गुप्तोऽप्युलूकतनयस्य तथा सजातिः ।
विप्राप्तसम्वदनतो नरपामरत्वं केषाञ्चिदुद्धरति वर्णविधेर्महत्त्वम् ।४७
यस्मादितः प्रलयमेति विभावरीति-
र्विश्वाश्रयिन्मृदुलताश्रयणान्यपीति ।
सद्भावनाविजयिनीं खलतां हसन्ति
तान्युत्तमानि किल कौतुकभाववन्ति ॥४८

एकत्वनामकवितर्कभुवा विचार-
भावेन कश्चिदथ भो परमाधिकार।
प्रोद्भिद्य मंक्षु कमलं लभते विकाश-
श्चारित्रभाववशवर्तितयाधुना सः ॥४६

लोकोऽन्वितो धृतविभावसुखश्रियासी-
त्सज्जो विधावुदितसत्कृतसम्पदाशीः ।
सद्यो विसर्गपरिणाममुपेत्य याव-
द्विभ्राजतेऽयि नृप केवलभृत्स तावत् ॥५०

श्रीभारतोक्तविभवो धृतराष्ट्र एष
वीरञ्जनाय खलु कौरवमीक्षते सः ।
कृष्णोऽलिरत्र कलिकालसदुत्सवाय
विघ्नोऽथ पद्ममपि सौरभविस्मयाय ॥५१

न क्वापि भाति अधुना द्विजराजवंशः
सुप्तोऽभिबाहुजसमाजसतावतंसः ।
कस्ते तुलाधर उदेति जनेषु वा यः
सम्विप्लवोऽत्र बहुधान्यसमीक्षणाय ॥५२

नक्षत्रता क्वचिदहो गुणिराडुपेता
पद्मे श्रियः समुदिता प्रभवन्ति एताः ।
कल्याख्य एष समयो भवदीक्षणीयः
जल्पे द्विजातिरुचितन्तु किलानणीयः ॥५३

नानाप्रसक्तिरिति यज्जडजेषु तेन रक्ताम्बरत्वमितमर्कमहोदयेन ।
सर्वैर्द्विजैरधिकृता कणभक्ष्यशिक्षा
सम्पादिता च तमसा सुगतैकदीक्षा ॥५४

दृष्ट्वा विवादमिह शाखिपदेषु नाना
भिन्नां स्थितिं स्मृतिभवाधिगतेर्निदानात् ।
तां पङ्कजातकलितामिति हासवृत्ति-
मस्त्येवनिर्वृ त्तिपथेऽथ सतां प्रवृत्तिः ॥५५
कूटस्थतां खरमरीचिरुपैति तात
भृष्टाध्वरो भवति वा द्विजराडिहातः ।
स्याद्वादमागुदितपिच्छगणस्य वृत्तिः
सा सौगताय नियता क्षणदा प्रवृत्तिः ॥५६
नो नक्तमस्ति न दिनं न तमः प्रकाशः
नैवाथ भानुभवनं न च भानुभासः ।
इत्यर्हतः खलु चतुर्थवचोविलास-
सन्देशकेमुममये किल कल्पभासः ॥५७
प्राक्शैलमेत्य विचरत्ययमंशुमाली-
त्थंतत्पदप्रचलितात्र जगंरिकाली ।
व्योम्नीक्षते नरवराथ तदेकभागः
मंगत्य भो जलरुहामधुना परागः ॥५८
सत्यार्थतां व्रजति यत्तु नभः स्वरूपं
शुष्यच्छुचाविव देरमृतस्य रूपं (?) ।
अस्माकमद्य नरनाथ न गौरवर्णा
सम्भाव्यतेऽथ जगतीन्यपि गौरवर्णा ॥५६
निर्मूलतां व्रजति भो क्षणदाप्रतीति-
र्दीपेषु नो भवति कापिलसत्प्रणीतिः ।

स्याद्वाद एव विभवः प्रतिपल्लवं सः
भात्यर्हतो दिनकरस्य यथावदंशः ॥६०
नैकान्तयुग्भवतु देहभृतोधिकारः
स्याद्वादतत्परतया नियतो विचारः ।
नैवाप्युलूकतनयप्रभृतेः प्रचारः
इत्यर्हतः समुदयस्तपनस्य सारः ॥६१
भानोः सुदर्शनमिहाप्यभवद्विवेकः
कोकस्य चारुचरणं मरुतस्तवेकः ।
शेषो विशेष इह मुक्तनिबन्धनस्य
श्रीसद्मनो भवतु भो जगतां नमस्य ॥६२
नैर्मल्यमेति किल धौतमिवाम्बरन्तु
स्नाता इवात्र सकला हरितो भवन्तु ।
प्राग्भूभृतस्तिलकवद्रविराविभाति
चन्द्रस्तु चोरवदुदास इतः प्रयाति ॥६३
सद्वारिशौक्तिकततिं स्वयमेव तेषु
सम्बिभ्रती कमलिनी कलपल्लवेषु ।
उद्घाटितस्वनयमा निजवल्लभस्या-
सौ स्वागतार्थमभिभाति हितैकवश्या ॥६४
उच्चैस्तनं स्पृशति कुड्मलमर्कदेव—
स्तत्रत्य केशरकृतोपशरीरमेव ।
अस्यापहृत्य जयिनः कललोहितत्वं
श्रीवारिजातविततेः समुदायसत्वम् ॥६५

भो भो प्रशस्तभविसम्भविसम्पदिभ्य
प्राच्यम्बरं लसति लोहितमब्जनीभ्यः ।
सद्योऽलिमुद्धरति शल्यमिवांशुमाली
कारुण्यपूर्णमिव पूत्कुरुते द्विजाली ॥६६

शीर्षे हिमांशुमुलुकं प्रतिरोमभागं
द्यौमूर्छितप्यनिशिचिन्त्यमिताप्यनागः ।
सिंदूरपूररुचिरं सुचिरप्रभाव—
मेषाधुना नृवरकम्बलमेति तावत् ॥६७

पुण्याहवाचनपरा समुदर्कसारापुण्याहवाचनपरासमुदर्कसारा ।
आशासिता सुरभिता नवकौतुकेन
वाशासितासुरभितानवकौतुकेन ॥६८

सम्मुद्रणं सह समेत्य समेन राज्ञा
भास्वन्तमाप्य च मणिं हसतीह भाग्यात् ।
आमोदसम्भृतभृदेष किलाब्जभूपः
सम्पश्य शस्यमनुजेष्ववंतसरूप ॥६९

मोदोऽभवत्सपदि हे नरनाथ चक्र—
वर्तीति पद्मनिधिरुल्लसितोऽन्त्यवक्रः ।
बिम्बं रवेरिह सुदर्शनमेत्य तावत्
पश्यन्ति सज्जनगणाः समयप्रभावं ॥७०

रात्र्यन्तकोऽभ्युदयते त्वमिव प्रतापी
येन प्रसक्तिरधुना सुमनोभिरापि ।
ये येऽप्युलूकतनया वनमाश्रयन्ति
त्वद्वैरिणश्च तिमिरेण धृता भवन्ति ॥७१

